सन्निपातादिदोषस्योत्पत्त्या मरणम्प्रतितस्य व्यापारतया व्यापारेणव्यवधानासम्भवात् कुतस्तर्ह्यास्तिकानां श्येनेन प्रवृत्तिरत आह अ
ग्निमेति तथाच पातकप्रयोजकत्वान्न तत्रास्तिकानाम्प्रवृत्तिरितिभावः। अत्रनव्याः। मास्तु श्येनस्य माहिंस्यादिति निषेधविषयत्वन्न।
थाव्यभिचारतया पापजनकत्वं सर्वसम्मतम् अभिचारस्योपपातकमध्येमनुना परिगणितत्वादिति कथनं तस्य वलवदनिष्टाननुवन्धि
त्वम् यत्त्वोक्तं श्येनजन्यखड्गाभिघातादेरेवाभिचारतया पापजनकत्वन्न श्येनस्येति तदपि न अभिचारमहीनत्वेत्यत्राभिचारपदेन
तज्जनकश्येनादेर्ग्रहणादन्यथाप्रत्यभिचारेण यत्र न खड्गघाताद्युत्पत्तिस्तत्र प्रायश्चित्तन्न स्यात् एवमपि श्येने पापप्रयोजकतया वल
वदनिष्टप्रयोजकत्वोपपादनस्याशक्यत्वाच्च प्रवृत्तिं प्रति वलवदनिष्टप्रयोजकत्वज्ञानस्यैव जनकतया तद्विषयस्यैव विध्यर्थत्वात्
तथाच श्येनस्य वलवदनिष्टाननुवन्धित्व — — मुपपाद्य विधेर्वलवदनिष्टाननुवन्धित्वविशिष्टेष्टसाधनत्वविशिष्टकृतिसाध्यत्वे शक्ति
रयुक्ता किन्तु त्रिषु शक्तित्रयं स्वीकृत्य क्वचित्कस्यचित्क्वचित्कस्यचिदर्थस्य वोध इत्यङ्गीकरणीयम् श्येनेनेत्यादौ तु वलवदनिष्टाननुव
न्धित्वस्य वोधो न भवत्येव परन्त्विष्टसाधनत्वकृतिसाध्यत्वयोरेवेति किञ्च विशेषणविशेष्यभावे विनिगमनाविरहेणापि विशिष्टशा
क्तिर्न युक्ता न च प्रत्येकं शक्तिं स्वीकृत्य क्वचित्कस्यचिदर्थस्य वोधोपगमे नियामकाभाव इति वाच्यम् तात्पर्यस्यैव नियामकत्वात् प्रत्ये
कशक्तिपक्षे ऽग्न्यङ्कुच्छेदित्यादिवाक्यानामिष्टसाधनत्वादिप्रमाजनकतया ऽप्रमाण्यापत्तिरित्यपि न। इष्टापत्तेः। तत्राप्रामाण्यव्यवहार
स्तु कदाचिद्वलवदनिष्टाननुवन्धित्वभ्रमजनकत्वनिवन्धनः। न च वलवदनिष्टाननुवन्धित्वे सतीष्टसाधनत्वे सति कृतिसाध्यः पाक
इत्येव वोधो न तु कृतिसाध्यत्वे सतीत्यादिरूप इति विशिष्टशक्तिपक्षेपि न विनिगमनाविरह इति वाच्यम् तथैव वोधो नान्यथेत्यस्य शपथ
निर्णेयत्वात् तस्माद्वलवदनिष्टाननुवन्धित्वादिषु प्रत्येकं शक्तिरिति प्रथमकल्प एव युक्तः। तत्रापि वलवदनिष्टाननुवन्धित्वन्नार्थः या
गादिजन्यनान्तरीयकदुःखस्यापि यदा कदाचित् यस्य कस्यचिद्वलवद्द्वेषविषयतया यजेतेत्यादीनामप्रामाण्यापत्तेः। न कलञ्जं भ
त्यादिनिषेधविधिवदश्वमेधेन न यजेतेत्यादीनामपि प्रामाण्यापत्तेश्च अश्वमेधादौ यदा यः पुरुषः प्रवर्त्तते तत्कालीनतत्पुरुषीयवलव
द्द्वेषविषयाजनकमर्थ इति न सत् कालभेदेन पुरुषभेदेन च विधिशक्तिकल्पने गौरवात् कालविशेषपुरुषविशेषाणां विशिष्यज्ञातुमशक्यतया काल

॥ विशेषपुरुषविशेषान्तर्भावेन शक्तेर्दुर्ग्रहत्वाच्च नाश्वमेधेन यजेतेत्या ॥

दिनिषेधविधिवन्न कलञ्जम्भक्षयेदित्यादिनिषेधविधीनामप्रामाण्यापत्तेश्च तत्र यदायः पुरुषः प्रवर्त्तेनेतत्कालीनतत्पुरुषीयबलवद्द्वेषविषया जनकत्वस्य तत्रापि सत्वात् किन्तु वैदिकविधेः पापाजनकत्वमर्थः तदभाव एव न कलञ्जम्भक्षयेदित्यादौ नञा बोध्यते शाकन्न भुञ्जीतेत्यादिवाक्यस्य प्रामाण्यनिर्वाहाय रोगाजनकत्वमप्यर्थः एवमुद्वेनोदहेत्वेकः पर्वतमारोहेदित्यादावपि तत्तदनिष्टाजनकत्वमर्थो बोध्यः न च शक्यानन्यत्वनरकत्वरोगत्वादीनां द्वेषविषयतावच्छेदकत्वेनोपलक्षणीभूतेनानुगमय्य तदवच्छिन्नप्रतियोगिताकाभावकूटे एकशक्त्यभ्युपगमात् रोगाद्यजनकत्वादौ लौकिकलिङो लक्षणाभ्युपगमादित्याहुरिति वदन्ति॥ ❀ ॥ विध्यर्थश्चाप्ताभिप्रायः। स च स्वेष्टसाधनतानुमापकइष्टसाधनताज्ञानञ्च प्रवर्त्तकमित्युदयनाचार्यमतमाह आचार्यास्त्विति इत्यादावित्यादिना। पाकङ्कुर्यामित्युत्तमपुरुषपरिग्रहः

आचार्यास्तु आप्ताभिप्रायो विध्यर्थः। पाकङ्कुर्यादित्यादावाज्ञादिरूपेच्छावाचित्ववत् लिङ्मात्रस्येच्छावाचित्वं लाघवात् एवञ्च स्वर्गकामो यजेतेत्यादौ यागः स्वर्गकामकृतिसाध्यतया आप्तेष्ट इत्यर्थः ततश्चाप्तेष्टत्वेनेष्टसाधनत्वादिकमनुमाय प्रवर्त्तते कलञ्जभक्षणे तदभावान्न प्रवर्त्तते यत्तु वेदे पौरुषेयत्वन्नाभ्युपैति तन्मते विधिरेव तावद्गर्भ इव श्रुतिकुमार्याः पुंयोगे मानम्॥ ६॥

आज्ञादीत्यादिनाध्येषणापरिग्रहः। तथा च पाकङ्कुर्याः पाकङ्कुर्यामिति मध्यमोत्तमपुरुषयोराज्ञाध्येषणारूपेच्छावाचित्व॥ लि॥ ङ्क्लृप्तन्तद्दृष्टान्तेन प्रथमपुरुषेपीच्छावाचित्वमनुमेयमिति भावः। लाघवादिति बलवदनिष्टाननुबन्धीष्टसाधनत्वाद्यपेक्षये। च्छात्वेन विधिशक्तौ लाघवादित्यर्थः। इत्यर्थः इति बोधः। अनुमायेति अत्र च यागो मम स्वर्गकामस्य बलवदनिष्टाननुबन्धीष्टसाधनम्मत्कृतिसाध्यतयाप्तेनेष्यमाणत्वात् मन्मात्रकृतिसाध्यत्वेनेष्यमाणमन्नौजनवदित्यनुमानमवधेयम् तदभावात् आप्तेष्टत्वाभावेन तद्धेतुकेष्टसाधनत्वज्ञानाभावात् ननु वेदे वक्तुरभावात्कस्येच्छा लिङा बोधनीयेत्यत आह यत्त्विति विधिरेवेति वक्तृभिन्ने।

॥ च्छाया बोधने विधेः सामर्थ्याभावाद्विधिरेव वेदवक्तरीश्वरे मानमिति भावः॥

का.सु.
टि.
२३०

नन्वकर्त्तृस्मरणमिति कर्त्तुः वेदकर्त्तुः अस्मरणं स्मृतिभिरबोधनम् तथाच वेदः पौरुषेयः अस्मर्यमाणकर्त्तृकत्वादित्यनुमानं बाधकमि
त्यर्थः। कपिलकणादेति कपिलकणादगौतमादिभिस्तच्छिष्यैश्चाद्यपर्यन्तमित्यर्थः। कर्त्तृस्मरणस्य सकर्त्तृकत्वबोधकस्मृतेरित्यर्थः। नन्वी
श्वरस्य वेदवक्तुः सर्गादौ केनचित्साक्षाददृष्टत्वादननुभवे स्मरणं तदभावे ऋषीणां स्मृतिप्रणयनञ्च न सम्भवतीति चेन्न पौरुषेयत्वानु
मानेन वेदवक्तारमनुभूय तन्मूलकश्रुतिस्मृतिप्रणयनयोः सम्भवात् अन्यथा वेदस कर्त्तृकत्वानङ्गीकारे तत्रैव स्मृतिष्वेव वेदस्य सकर्त्तृ
कत्वे श्रुतिं प्रदर्श्य स्मृतिमपि प्रदर्शयति एवमिति ननु वेदस्य नित्यत्वबोधकं भारतादावेव तस्याः कर्त्तृकत्वे प्रमाणं भविष्यतीत्याशङ्कते
स्वयम्भूरिति नित्य इत्यर्थः। एष भगवानित्यपि वेदविशेषणं स्तुतिमात्रमिति तथाच पूर्वोक्तश्रुतिस्मृत्योर्विरोधेनास्य भारतस्य न स्वार्थे

नन्वकर्त्तृस्मरणं बाधकम् कपिलकणादादिभिरद्यपर्यन्तं कर्त्तृस्मरणस्यैव प्रतीयमानत्वात् अन्यथा स्मृतीनामप्य
कर्त्तृकत्वापत्तेः तत्रैव कर्त्तृस्मरणमस्तीति चेद्वेदेऽपि छन्दांसि जज्ञिरे तस्मादित्यादि कर्त्तृस्मरणमस्त्येव एवं श्रुतिम
न्वन्तरं चैषा श्रुतिरन्या विधीयते इत्यपि द्रष्टव्यम् स्वयम्भूरेष भगवान्वेदो गीतस्त्वया पुरा शिवाद्या ऋषिपर्यन्ताः।
स्मर्त्तारोऽस्य न कारका इति तु वेदस्य स्तुतिमात्रम् न च पौरुषेयत्वे भ्रमादिसम्भवात् प्रामाण्यं स्यादिति वाच्यम्
नित्यसर्वज्ञप्रणीतत्वेन निर्दोषत्वात् अत एव पुरुषान्तरस्य भ्रमादिसंभवान्न कपिलादेरपि कर्त्तृत्वं वेदस्य॥ ६ ॥

तात्पर्यमपि तु स्तुतिपरत्वमिति भावः भ्रमादिसम्भवात् पुरुषस्य भ्रमप्रमादादिदोषसम्भवादित्यर्थः। नित्यसर्वज्ञत्वेनेति नित्यसर्ववि-
षयकज्ञानवत्त्वेनेत्यर्थः निर्दोषत्वात् भ्रमादिशून्यत्वात् अत एव नित्यसर्वज्ञत्वभावादेव॥ ६ ॥ ननु नित्यसर्वज्ञपुरुषप्रणीत-
त्वापेक्षया नित्यनिर्दोषत्वं वेदे स्वीक्रियतां तदेव वेदप्रामाण्ये प्रयोजकमस्तु तथाच सकर्त्तृत्वानुमाने बाध इत्यतो वेदस्य नित्यत्वे बाध-
कमाह किञ्चेति तत्सन्दर्भस्येति तन्निष्ठानुपूर्वीविशेषस्येत्यर्थः आनुपूर्व्या नित्यत्वे त्वनित्यसमवेतनित्यस्य जातित्वेनानुपूर्व्या
जातित्वापत्तेरिति भावः। अत्र चानिच्छाविषयत्वस्येश्वरेच्छाविषयत्वरूपस्य केवलान्वयिनः कलञ्जभक्षणे॥ ॥

राम.
२३०

पिसत्वाद्बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वरूपसाध्यस्यचतत्राभावेनव्यभिचारात्कथन्तस्यतदनुमापकत्वम् बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वप्रकारकेच्छायालिङ्गत्वेचलाघवाद्बलवदनिष्टाननुबन्धीष्टसाधनत्वमेवलिङ्गमस्तु इष्टत्वमात्रेच्छयेत्यस्वरसआचार्यास्त्वित्यनेनसूचितः॥ नन्विष्टसाधनत्वस्यनविधितोबोधः संभवतिस्वर्गत्वावच्छिन्नसाधनत्वस्ययागेबाधात् गङ्गास्नानादिजन्यस्वर्गेव्यभिचारात् स्वर्गनिष्ठवैजात्यावच्छिन्नसाधनत्वस्ययागे सत्वेपितद्वैजात्यस्यविधिबोधितस्वर्गसाधनत्वान्यथानुपपत्त्याकल्पनीयस्यप्रागनुपस्थित्या तद्घटितकारणत्वेविधिशक्तिग्रहायोगादितिचेन्न स्वरूपसंबंधविशेषरूपायास्वकारणतायाविध्यर्थत्वोपगमादित्येके॥ अ

किञ्च वर्णानामेवानित्यत्वस्यवक्ष्यमाणत्वात्सुतरान्तत्सन्दर्भस्यवेदस्यानित्यत्वमितिसङ्क्षेपः॥ छ॥ उपादानस्येति उपादानस्यसमवायिकारणस्याध्यक्षम् प्रत्यक्षम्प्रवृत्तौकारणमिति निवृत्तिमिति द्विष्टसाधनताज्ञानस्यनिवृत्तिप्र

उपादानस्यचाध्यक्षम्प्रवृत्तौजनकम्भवेत्। निवृत्तिस्तुभवेद्द्वेषाद्द्विष्टसाधनताधियः १५१ यत्नोजीवन
योनिस्तुसर्वदातीन्द्रियोभवेत्॥

१ तज्जनकत्वमन्वयव्यतिरेकाभ्यामवधारितमितिभावः १४९।१५०।१५१॥

यत्नइति जीवनयोनियत्नोयावज्जीवनमनुवर्त्तते सचातीन्द्रियः तत्रप्रमाणमाह॥

१ न्यथासिद्धिनिरूपकतानवच्छेदकनियतोत्तरवर्त्तितावच्छेदकधर्मवत्स्वर्गकत्वमेवस्वर्गकारणत्वमित्यन्ये। वस्तुतस्तुस्वर्गनिष्ठधर्मावच्छिन्ननिरूपितनियतपूर्ववर्त्तितावच्छेदकधर्मवत्त्वमेवस्वर्गकारणत्वम् तच्चयागेनबाधितंस्वर्गनिष्ठवैजात्यरूपस्वर्गधर्मावच्छिन्नप्रतियोगस्यव्यभिचाराभावात् ननुविधेरिष्टसाधनत्वेशक्तित्वेपिस्वर्गसाधनत्वस्यकथन्ततोबोधः स्वर्गसाधनत्वादौविधिशक्तिकल्पनेतुशक्त्यानन्त्यम् नचविधिप्रत्ययोपस्थितेइष्टेस्वर्गपदोपस्थितस्वर्गस्याभेदेनान्वयात्स्वर्गाभिन्नेष्टसाधनत्वस्यबोधः सम्भवतीतिवाच्यम् स्वर्गपदस्यसमासान्तर्गततयातदर्थस्यान्यत्रान्वयासम्भवादितिचेन्न स्वर्गसाधनत्वादौविधेःशक्तिकल्पनेनतथाबोधनिर्वाहात् नचैकैकस्यबोधेविधेर्विनिगमकाभावःस्वर्गादिपदसम
॥ भिव्याहाराधीनतद्धर्मघटितसाधनत्वेतात्पर्यग्रहस्यैवविनिगमकत्वात्॥

नचैवं विधिशक्त्यानन्त्यं स्वर्गत्वादिधर्मावच्छिन्ननिरूपितसाधनत्व एवैकशक्त्युपगमात् नचशक्यतावच्छेदकभेदाच्छक्तिभेदः इष्टतावच्छे
दकत्वेन स्वर्गत्वादीन्यनुगतीकृत्य तदवच्छिन्ननिरूपितसाधनत्वे एकशक्त्युपगमात् नचेष्टतावच्छेदकत्वेनैव शाब्दबोधे स्वर्गत्वादीनां भानं स्या
न्न तु स्वरूपत इति वाच्यम् इष्टतावच्छेदकत्वस्योपलक्षणतया शक्तिविषयत्वाद्विशेषणस्यैव शाब्दबोधे भानोपगमात् उपलक्षणत्वञ्च तत्पदज
न्यबोधाविषयत्वेन शक्तिविषयत्वं तत्पदजन्यबोधविषयत्वेन शक्तिविषयत्वमेव च विशेषणत्वमित्यन्यत्र विस्तरः समवायिकारणस्येति तत्सा
ध्यकप्रवृत्तिं प्रतितत्समवायिकारणात्मकतदुपादानगोचरलौकिकप्रत्यक्षस्य हेतुत्वम् नचशब्दसाध्यकप्रवृत्तेर्मृदङ्गादीनस्यात्तदुपादानस्य

शरीर इति प्राणसञ्चारो हि प्रयत्नसाध्यः इत्थञ्च प्राणसञ्चारस्य सर्वस्य यत्नसाध्यत्वानुमानात् प्रत्यक्षप्रयत्नबाधाच्चा
तीन्द्रिययत्नसिद्धिः । स एव जीवनयोनिर्यत्नः । गुरुत्वं निरूपयति अतीन्द्रियमिति अनित्येति अनित्ये द्व्यणुकादौ तद्गुरुत्व

शरीरे प्राणसञ्चारे कारणन्तत्प्रकीर्त्तितम् १५२ अतीन्द्रियङ्गुरुत्वं स्यात्पृथिव्यादिद्वये तु तत् अनित्ये तद ।
नित्यं स्यान्नित्ये नित्यमुदाहृतम् १५३ तदेव समवायि स्यात्पतनाख्ये तु कर्मणि सांसिद्धिकन्द्रवत्वं स्यान्नैमि
त्तिकमथापरम् १५४ सांसिद्धिकन्तु सलिले द्वितीयं क्षितितेजसोः ॥ ९ मनित्यन्नित्ये परमाणौ नित्यं गुरुत्वमित्य
नुवर्त्तते । तद्गुरुत्वमसमवायि असमवायिकारणम् तदेवेति पतनाख्य इति आद्यपतन इत्यर्थः द्रवत्वं निरूपयति सांसि
द्धिकमिति द्रवत्वं द्विविधं । सांसिद्धिकं नैमित्तिकञ्चेत्यर्थः । द्वितीयम् नैमित्तिकम् ॥ ९ गगनस्यातीन्द्रियत्वात् एवञ्च शब्दसाध्यकप्र



वृत्तिरपि तत्समवायिनोऽप्रसिद्धेरिति वाच्यम् इष्टापत्तेः शब्दसाक्षात्कारसाध्यकप्रवृत्तेरेव मृदङ्गादिगोचराया उपगमादिति प्राचीनमतानु
सारेणेदम् नवीनमते त्वधिष्ठानमात्रमुपादानं बोध्यम् तेन यागादेर्हविः शब्दस्य मृदङ्गादिः प्राणसञ्चारादेश्च प्राणवहनाड्यादिरूपादा
नमिति बोध्यम् १४९।१५०।१५१ मूले द्वेषादिति फलगतो द्वेषो द्विष्टसाधनताज्ञानञ्च निवृत्तिं प्रति कारणमित्यभिप्रायेणोक्तम् प्राणसञ्चारो दे

अधिकश्वासादिः प्राणसञ्चारो यत्नसाध्यः प्रत्यक्षयत्नसाध्यतया दृष्टः धावतः प्रयत्नोत्कर्षेण श्वासक्रियोत्कर्षदर्शनादिति भावः। इत्यत्रेति दृष्टान्तसिद्धावित्यर्थः सर्वस्येति। एकत्रयत्नसाध्यत्वस्यानुभविकत्वेन तद्दृष्टान्तेन प्राणसञ्चारत्वावच्छेदेन सर्वत्र भोक्तृयत्नजन्यत्वानुमाना-दिति भावः सएव प्राणसञ्चारहेतुत्वेनानुमीयमान एव नव्यास्तु जीवनयोनियत्ने मानाभावः प्राणक्रियाया अदृष्टविशेषप्रयोज्यात्ममनो-योगरूपाज्जीवनात्तत्प्रयोजकादृष्टाद्वा सम्भवादुक्तानुमानस्य चाप्रयोजकत्वात् अन्यथैकत्र यत्ने ज्ञानजन्यत्वदृष्टान्तेन जन्ययत्नत्वावच्छे-

परमाणाविति जलपरमाणोर्द्रवत्वन्नित्यमित्यर्थः। अन्यत्र पृथिवीपरमाण्वादौ जलद्व्यणुकादौ च द्रवत्वमनित्यं। कुत्र चित्तेजसि कुत्रचित्पृथिव्याञ्च नैमित्तिकं द्रवत्वन्तत्र कोवा नैमित्तिकार्थस्तद्दर्शयति १५३।१५४।१५५ नैमित्तिकमिति वह्नी ति अग्निसंयोगजन्यनैमित्तिकन्द्रवत्वम् तच्च सुवर्णादिरूपे तेजसि घृतजतुप्रभृतिपृथिव्याञ्च वर्त्तत इत्यर्थः द्रवत्वमिति

परमाणौ जले नित्यमन्यत्रानित्यमिष्यते १५५ नैमित्तिकं वह्नियोगात्तपनीयघृतादिषु द्रवत्वं स्यन्दने हेतुर्निमित्तं सङ्ग्रहे तु तत् १५६ स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ तैलान्तरे तत्प्रकर्षाद्दहन-स्यानुकूलता १५७ संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने॥९ हेतुमिति असमवायिकारणमित्यर्थः सङ्ग्रहे। सक्तुकादिसंयोगविशेषे तद्द्रवत्वं स्नेहसहितमिति बोद्धव्यम् तेन द्रुतसुवर्णादीनान्न सङ्ग्रहः १५६ स्नेहन्निरूपयति। जल इति जलस्यैवेत्यर्थः। असौ स्नेहः। ननु पृथिव्यामपि तैले स्नेह उपलभ्यते न चासौ जलीयस्तथा सति दहनप्रातिकूल्यप्रसं॥ङ्गात् अत आह।तैलान्तरइति।तत्प्रकर्षात्॥९

देन ज्ञानजन्यत्वकल्पनापत्त्या सुषुप्तौ ज्ञानादेरप्यतीन्द्रियस्य कल्पनापत्तेरि तिप्राहुः १५२ पतनसमवायिभिन्नत्वरूपं पतनासमवायित्वं रूपादावति व्याप्तमतो व्याचष्टे असमवायिकारणमिति द्वितीयादिपतन-स्य वेगासमवायिकारणकत्वादाह आद्येति एवञ्च संयोगासमवधानकालीनाक्रियागुणासमवायिकारणिका क्रिया त्वात्संयोगजन्यक्रिया

अग्निसंयोगजन्यमिति अग्निसंयोगासमवायिकारणकमित्यर्थः। वक्ष्यमाणातिप्रसङ्गादाह स्नेहसहितमिति तच्च सांसिद्धिकमेव तथा च। सांसिद्धिकद्रवत्वत्वेन हेतुत्वान्न सुवर्णादिद्रवत्वस्य सङ्ग्रह इति भावः। न चावश्यकस्नेहहेतुत्वेनैवातिप्रसङ्गे सांसिद्धिकद्रवत्वस्य सङ्ग्रहहेतुत्वे मानाभाव इति वाच्यम् स्नेहत्वेन सांसिद्धिकद्रवत्वत्वेन वा हेतुत्वमित्यत्र विनिगमनाविरहेणोभयस्यापि हेतुत्वात् १५६ असौ तैले प्रतीयमानः स्नेहो जलीयः तैलान्तर्गतजलभागनिष्ठस्तथा सति तैलान्तर्जलभागस्वीकारे दहनप्रातिकूल्यप्रसङ्गात् दहननाशप्रसङ्गात् दहनाश्रय

स्नेहप्रकर्षात्तैले उपलभ्यमानः स्नेहोपि जलीय एव तस्य प्रकृष्टत्वादग्नेरानुकूल्यम् अपकृष्टस्नेहं हि जलं वह्निं नाशयतीति भावः १५७ संस्कारं निरूपयति संस्कारभेद इति वेगस्थितिस्थापकभावनाभेदात् संस्कारस्त्रिविध इत्यर्थः॥ ६ ॥

मूर्त्तमात्र इति कर्मजवेगजभेदाद्वेगो द्विविध इत्यर्थः। शरीरादौ हि नोदनजनितेन कर्मणा वेगो जन्यते तेन च पूर्वकर्म

मूर्त्तमात्रे तु वेगः स्यात्कर्मजो वेगजः क्वचित् १५८ स्थितिः स्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि अतीन्द्रियोसौ विज्ञेयः क्वचित्स्पन्देपि कारणम् १५९॥ ९

नाशस्तत उत्तरकर्म एवमग्रेपि विना च वेगं कर्मणः प्रतिबन्धकत्वात्पूर्वकर्मनाश उत्तरकर्मोत्पत्तिश्च न स्यात् यत्र च वेगवता कपालेन जनिते घटे वेगो जन्यते स वेगजो वेगः १५८ स्थितिस्थापकेति अतीन्द्रिय इति आकृष्टशाखादीनां परित्यागे पुनर्गमनस्य॥ ९ तिसंयोगेन जलस्य हेतुत्वादिति भावः १५७ वेगो जन्यत इति वेगत्वन्तु जातिविशेषः प्रत्यक्षसिद्धः। तेनेति। कर्मनाशकस्योत्तरसंयोगस्य तदानीमभावाद्वेगस्यैव कर्मनाशकत्वं कल्प्यत इति भावः ततइति। पूर्वकर्मनाशानन्तरमित्यर्थः। एवमग्रेपीति। उत्तरकर्मणापि पूर्ववेगनाशस्ततो वेगान्तरोत्पत्तिरित्येवमादिरित्यर्थः। विना च वेगमिति वेगं विना कर्मनाशो न स्यादित्यन्वयः। नाशकान्तराभावादिति भावः ननु पूर्वकर्मणो नाशाभावे का क्षतिरत आह कर्मोत्पत्तिश्च न स्यादिति अत्र हेतुः कर्मणः प्रतिबन्धकत्वादिति अत्र केचित् उत्तरसंयोगेनैव पूर्वकर्मनाशोत्तरकर्मणोः॥

संभवात्तत्पूर्वकर्मनाशककर्मोत्पत्ति स्वीकारे प्रयोजनाभावाद्लंवेगेन तस्माद्वेगेन गच्छतीति कर्मजनकतया प्रत्यक्षमेव वेगे प्रमाणमित्या
हुः १५८ पुनर्गमनस्येति यथापूर्वसंयोगजनकक्रियाया इत्यर्थः॥ ६ ॥ स्थितिस्थापकसाध्यत्वादिति। वेगस्य तूत्तरदेशसंयोगजनकक्रिया
जनकत्वन्तु यथापूर्वसंयोगजनकक्रियाजनकत्वमिति न वेगेन स्थितिस्थापकस्यान्यथासिद्धिरिति भावः। स्थितिस्थापकत्वं जातिविशेषः॥
क्रियाविशेषजनकतावच्छेदकतया सिद्धः। स्थितिस्थापकश्च क्रियाविशेषजनकः स्वजन्यक्रियानाश्यो ऽतीन्द्रियश्चेति मूले उक्तप्रायम् १५९

स्थितिस्थापकसाध्यत्वात् केचिदिति चतुर्षु क्षित्यादिषु स्थितिस्थापकङ्के चिन्मन्यन्ते तत्र प्रमाणमिति भावः। असौ। स्थि
तिस्थापकः क्वचित्कृष्टशाखादौ १५९ भावनाख्य इति तस्य संस्कारस्योपेक्षात्मकज्ञानात्संस्कारानुत्पत्तेरुपेक्षानात्मक इत्यु
क्तं। तत्संशयात्तस्यानुत्पत्तेर्निश्चय इत्युक्तं तेनोपेक्षान्यनिश्चयत्वेन संस्कारस्मृतिहेतुतेति भावः ननु स्मरणस्मृत्युपेक्षान्यनिश्च

भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् १६० स्मरणे प्रत्य
भिज्ञायामप्यसौ हेतुरुच्यते॥ ९ यत्त्वेन हेतुत्वं तेनोपेक्षादिस्थले न स्मरणम् इत्यच्च संस्कारस्मृतिज्ञानत्वेनैव हे
तुतास्त्विति चेन्न विनिगमनाविरहेणापि संस्कारस्मृतिउपेक्षान्यनिश्चयत्वे हेतुतायाः सिद्धत्वात् किञ्चोपेक्षास्थले सं
स्कारकल्पनायाः गुरुत्वात्संस्कारस्मृतिउपेक्षान्यत्वेन हेतुतायाः सिद्धत्वात् असौ संस्कारः तत्र प्रमाणं दर्शयति स्मरण
इति यतः स्मरणं प्रत्यभिज्ञानञ्च जनयत्यतः संस्कारः कल्प्यते॥ ९ इत्यच्च उक्तप्रकारेणोपेक्षाज्ञानात्स्मृतिवारणे च वस्तुतः
संस्कारस्मृत्युपेक्षान्यनिश्चयत्वेन हेतुत्वमेव विनिगमकमस्तीत्याह किञ्चेति संस्कारकल्पनाया गुरुत्वादित्यस्य स्मृतिस्मृत्वेनोपेक्षान्यनिश्च
यत्वेन हेतुत्व इत्यादिः। सिद्धत्वादित्यग्रिमस्यापि पञ्चम्यन्तस्य नेत्यनेनान्वयः। उद्देश्यवाचकपदस्य प्रागपेक्षितत्वात्तथा न्वयप्रदर्शनार्थमुदीच्यस्था
प्यसावित्यस्य प्राक् धारणमिति बोध्यम् तत्र संस्कारे॥ अतः संस्कारः कल्प्यत इति अथानुभवस्य ध्वंस एव व्यापारोस्तु प्रतियोग्यभावयोरेक
॥ त्राजनकत्वमित्यस्याप्रयोजकत्वात् न चानुभवस्य स्मृतिं प्रति प्रतिबन्धकत्वापत्तिरिति वाच्यम्॥

का॰मु॰ दि॰ २३३

संसर्गाभावत्वावच्छिन्नकारणताश्रयीभूताभावप्रतियोगित्वस्यैव प्रतिबन्धकतापदार्थत्वादिह च संसर्गाभावत्वेनाजनकत्वात् न चानुभवद्वि-
तीयक्षणोत्पन्नसंस्कारेण तृतीयक्षणे स्मरणसंभवात् ध्वंसस्य व्यापारत्वं न संभवति फलस्य प्राक्कालेऽनुभवध्वंसस्याभावादिति वाच्यम् तथापि क्ष-
णविलम्बेनैव स्मरणाभ्युपगमादिति चेन्न संस्कारानङ्गीकारे कदाचिदनुभूतस्य सर्वदा स्मरणापत्तेः। अनुभवध्वंसात्मकव्यापारस्य सर्वदा सत्त्वात्
न चोद्बोधकाभावादस्मरणमिति वाच्यम् यत्र वस्तुविशेषज्ञानात्मकोद्बोधकेन दृश्यपञ्चकवाचकघटादेः स्मरणानि जातानि न त्वधिकानि तत्र घटादिस्मृ-
तीनां तद्वस्तुज्ञानस्यैव नियतोद्बोधकतया न तत्सत्त्वेऽप्युद्बोधकाभावस्य वक्तुमशक्यत्वात् वस्तुतस्त्वनुपदं वक्ष्यमाणपूर्वसाधकयुक्त्या संस्कारसिद्धिरिति।

विना व्यापारं पूर्वानुभवस्य स्मरणादिजननाऽसामर्थ्यात् स्वस्वव्यापारान्यतराभावे कारणत्वासंभवात् न च प्रत्यभिज्ञाम्प्र-
ति तत्र संस्कारस्य हेतुत्वे प्रत्यभिज्ञायाः संस्कारजन्यत्वेन स्मृतित्वापत्तिरिति वाच्यम् अप्रयोजकत्वात् परे त्वनुद्बुद्धसंस्का-

धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिकारणम्। १६१ गङ्गास्नानादियागादिव्यापारः स तु कीर्तितः॥

रात्प्रत्यभिज्ञानुदयादुद्बुद्धसंस्कारस्य हेतुत्वापेक्षया तत्तत्स्मरणस्यैव प्रत्यभिज्ञाम्प्रति हेतुत्वं कल्प्यत इत्याहुः अदृष्ट-
न्निरूपयति धर्मेति स्वर्गादीति स्वर्गादिसकलसुखानां स्वर्गसाधनीभूतशरीरादीनाञ्च साधनं धर्म इत्यर्थः तत्र प्रमा-
णं दर्शयितुमाह यागादीति

रवाधेति ध्येयम् स्वस्वव्यापाराभावे कार्याव्यवहितपूर्वक्षणे स्वस्वव्यापारान्यतराभावे कारणः
त्वासंभवादिति कार्याव्यवहितप्राक्क्षणवृत्तिस्वस्वव्यापारान्यतरकत्वस्यैव कारणतापदार्थत्वाभावादिति भावः। अप्रयोजकत्वादिति। सं-
स्कारजन्यत्वस्य स्मृतित्वेऽप्रयोजकत्वाभावादित्यर्थः। मणिकृन्मतम्प्रदर्शयति परे त्विति त्वन्मतेऽन्तराकल्पनीयस्मृतिव्यक्त्युद्बुद्धसंस्कार-
स्य हेतुत्वकल्पनं मन्मते तु प्रत्यभिज्ञायान्तद्धेतुत्वकल्पनमिति समानमन्तरा स्मृतिव्यक्तिकल्पने प्रत्यभिज्ञायान्तद्धेतुत्वकल्पने च तत्राधिक-
गौरवमित्याहुरित्यनेनास्वरसः सूचितः स्वर्गादीत्यत्र स्वर्गपदेन सुखमात्रस्यादिपदेन शरीरेन्द्रियादेः परिग्रह इति प्रदर्शयति स्वर्गादि।
सकलेत्यादिना अग्रे नरकादीनामित्यत्राप्येवम् तत्र धर्मे॥

राम २३३

यागादीति आदिना होमदानपरिग्रहः। यागत्वञ्च देवतोद्देश्यकस्वस्वत्वध्वंसवद्द्रव्यविशेष्यकेच्छात्वम्। देवतोद्देश्यकत्वन्देवतास्वत्ववद्विशे-
ष्यकत्वम् शब्दस्मयो देवतेति पक्षे तु तस्माद्द्विमित्याकारज्ञानविषयत्वमुद्देश्यत्वम्। होमत्वञ्चाग्निसंयोगानुकूलक्रियानुकूलघृतादित्यागत्वम् दानादिव्या-
पारत्वम् दानत्वञ्च मूल्यग्रहणम्विना स्वस्वत्वध्वंसपरस्वत्वजनकत्यागत्वमिति सम्प्रदायः। यागत्वहोमत्वादयो मानसप्रत्यक्षगम्या जाति-
विशेषाइत्यन्ये श्राद्धस्यापि पित्रपेक्षया यागत्वेन ब्राह्मणापेक्षया दानत्वेन तत्र साङ्कर्यान्नेदं युक्तमित्यपरे। अन्यथा धर्माभावे चिरविनष्टस्या-
प्यनुभवस्य स्मृतिजनकत्वादाह निर्व्यापारतयेति चिरध्वस्तमिति चिरकालनष्टङ्कर्मातिशयमपूर्वं विना फलाय फलजननाय न।

यागादिव्यापारतया धर्मः कल्प्यते अन्यथा यागादीनाञ्चिरविनष्टतया निर्व्यापारतया च कालान्तरभाविस्वर्गजनक-
त्वन्न स्यात्। तदुक्तमाचार्यैः चिरध्वस्तम्फलायालन्न कर्मातिशयं विनेति ननु यागध्वंस एव व्यापारः स्यात् न च प्रति-
योगितत् ध्वंसयोरेकत्राजनकत्वं सर्वत्र तथात्वे मानाभावात् न च तन्मते फलानन्त्यमन्मते चरमफलस्यापूर्वनाश-
कत्वान्न तथात्वमिति वाच्यम् कालविशेषस्य सहकारित्वादित्यत आह गङ्गास्नानेति गङ्गास्नानस्य हि स्वर्गजन-
कत्वे तन्तानाञ्जलसंयोगध्वंसानाम्व्यापारत्वमपेक्ष्यैकमपूर्वमेव कल्प्यते लाघवादिति भावः। ननु ध्वं-
सोऽपि न व्यापारोऽस्तु न च निर्व्यापारस्य चिरध्वस्तस्य कथङ्कारणत्वमिति वाच्यम्॥ १ तन्न समर्थमित्यर्थः तथात्वे ध्वं-
सप्रतियोगिनोरेकत्रजनकत्वाभावे एकमेवापूर्वङ्कल्प्यत इति वस्तुतस्तु यागस्यापि ध्वंसो न व्यापारः तथात्वे कीर्त्तितयागात्स्वर्गोत्पाद-
वारणाय स्वर्गजनकतावच्छेदककोटौ कीर्त्तितभेदो निवेशनीयस्तत्र च कीर्त्तितत्वस्यैकस्याभावेन कीर्त्तितत्वावच्छिन्नप्रतियोगिताकभे-
दनिवेशनमशक्यमतः कीर्त्तितव्यक्तीनान्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकस्य भेदो निवेशनीयः एवञ्च दशकीर्त्तितयागस्थले प-
रस्परन्तद्व्यक्तिभेदसत्वेन स्वर्गोत्पादवारणाय भेदकूटस्यैव कारणतावच्छेदकत्वमुपगन्तव्यम् तत्र च विशेषणविशेष्यभावे विनि-
गमनाविरहेण कार्यकारणभावानन्त्यमपूर्वस्वीकारे तु क्षणिकतया कीर्त्तितयागानामेलनासम्भवेन भेदानामेकत्र निवेशप्रयोजनाभावः

यादृशकीर्त्तितयागादपूर्वमापादनीयन्तद्भेदावच्छिन्नयागव्यक्तेस्तदानीमभावात् नचापूर्वसम्बन्धेन कीर्त्तितयागव्यक्तीनामेलनं सम्भव
तीति स्वर्गजनकतावच्छेदककोटौ कीर्त्तितभेदानामेकत्र निवेश आवश्यक इति वाच्यम् अपूर्वोत्पत्त्यैवास्वर्गसम्भवे स्वर्गजनकतावच्छेद
ककोटौ कीर्त्तितभेदानामनिवेशात् कीर्त्तितयागाद्युत्पादे नध्वंसजनकतावच्छेदककोटौ कीर्त्तितभेदनिवेशस्यासम्भवादित्यन्यैरपरिशीलि
तः पन्थाः कारणत्व इति घटकत्वं सप्तम्यर्थः एवमग्रेऽपि कार्यकालवृत्तित्वमेवेति यथासमवायिकारणस्य कारणत्वे कार्यकालवृत्तित्वम्घट
कत्वं तत्समवायिकारणस्य कारणत्वे तथेत्यर्थः तेन कर्मनाशाजलस्पर्शादिना तस्य यागादेः पूर्वम् कर्मनाशाजलस्पर्शादितः पूर्वं वृत्त।

अनन्यथासिद्धनियतपूर्ववर्त्तित्वस्य तत्रापि सत्त्वात् अव्यवहितपूर्ववर्त्तित्वं हि चास्तु संयोगादेः कारणत्वेन तु सर्वत्र कार्यका
लवृत्तित्वमिव समवायिकारणस्य कारणत्वे इत्यत आह कर्मनाशेति यदि हि अपूर्वं न स्यात्तदा कर्मनाशाजलस्पर्शादिना ना।
श्यत्वं धर्मस्य न स्यात् न हि तेन यागादेर्नाशः प्रतिबन्धो वा कर्त्तुं शक्यते तस्य पूर्वमेव वृत्तत्वादिति भावः एतेन देवताप्रीतेरेव फल

कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः १६२ अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः ॥ ६ ॥

त्वमित्यपास्तम् गङ्गास्नानादौ सर्वत्र देवताप्रीतेरसंभवाच्च देवताया अचेतनत्वेऽपि तत्प्रीतेरनुद्देश्यत्वात् प्रीतेः सुखरूपत्वेन विष्णु
प्रीत्यादौ तदसम्भवात् जन्यसुखस्य तत्राभावात् तेन विष्णुप्रीतिजन्यत्वेन पराभिमतस्वर्गादिरेव विष्णुप्रीतिशब्देन लक्ष्य
ते १६१।१६२। अधर्मेति नरकादिसकलदुःखानां नारकीयशरीरादीनाञ्च साधनमधर्म इत्यर्थः तत्र प्रमाणमाह ॥ ६ ॥

त्वादिति उत्पन्नत्वाद्धि नष्टत्वाच्चेत्यर्थः। योग्यविभुविशेषगुणानां स्वोत्तरोत्पन्नगुणनाश्यत्वादिच्छात्मकयागस्य तृतीयक्षण एव नष्टत्वादि
ति भावः। एवमग्रेऽपि धर्मः स्मरतीत्यस्य धर्मो यागादिः स्मरति फलभाक् भवतीत्यर्थकं तया कर्मनाशाजलस्पर्शादेः स्वध्वंससंबन्धेन स्वर्गादि
फलप्रतिबन्धकत्वमेव युक्तमिति न सत् एकाश्वमेधानन्तरमश्वमेधः कृत इति कीर्त्तिते तदुत्तरस्तु नरश्वमेधकरणेऽपि स्वर्गानुदयापत्तेः। न च मदश्वमे
धजन्यस्वर्गत्वावच्छिन्नं प्रति तत्कीर्त्तनत्वेन प्रतिबन्धकत्वान्नाश्वमेधान्तरात्स्वर्गानुदयप्रसङ्ग इति वाच्यम् ॥ ॥ ॥

यदश्वमेधस्य कीर्त्तनं तत्तु अश्वमेधजन्यस्वर्गप्रसिद्ध्या तादृशप्रतिबध्यप्रतिबन्धकभावस्य कल्पयितुमशक्यत्वात् तच्चापूर्वं दर्शपूर्णमासः योर्हि त्रिविधं परमापूर्वं कलिकापूर्वञ्चेति तथाहि यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्याञ्चाच्युतो भवति उपांशुयाजमन्तरा यजति ताभ्यामेतमग्नीषोमीयमेकादशकपालम्पूर्णमासे प्रायच्छत् ऐन्द्रं दध्यमावास्यायामैन्द्रम्पयोऽमावास्यायामिति पञ्चभिर्वाक्यैर्विहितेभ्यः षड्भ्य आग्नेयादिभ्यः षडुत्पत्त्यपूर्वाणि तान्येव कलिकापूर्वाण्युच्यन्ते तेभ्यश्च परमापूर्वमिति ननु षडपूर्वाण्यावश्यकानि साक्षादेव स्वर्गहेतवः सन्तु किम्परमापूर्वेणेति चेन्न दर्शपूर्णमासाभ्यां यजेतेत्यनेनोभयत्वावच्छिन्नस्य स्वर्गसाधनत्वावगमादुभयत्वावच्छिन्नस्यैकव्यापारकल्पनाद् उत्पत्त्यपूर्वाणाञ्चोभयत्वावच्छिन्नाजन्यत्वात् दर्शपूर्णमासाभ्यामिति विधिप्रवृत्तिसमये चिरविनष्टस्य दर्शपूर्णमासस्य व्यापारतयैकस्यैवापूर्वस्य कल्पनाच्च नचैवमनन्तरं खण्डयागानाङ्गिकावज्ञाने षडपूर्वकल्पनागौरवन्तस्य फलमुखत्वात् नच पञ्चभिः पञ्चापूर्वद्वारा षष्ठेन च साक्षादे।

प्रायश्चित्तेति यदिस्य धर्मो न स्यात्तदा प्रायश्चित्तादिनाश्यत्वन्न स्यात् नहि तेन ब्रह्महननादीनां नाशः प्रतिबन्धो वावि

प्रायश्चित्तादिनाश्योऽसौ जीववृत्तिस्त्विमौ गुणौ।१६३॥

धातुं शक्यते तस्य पूर्वमेव वृत्तत्वादिति भावः। जीवेति ईश्वरस्य धर्माधर्माभावादिति भावः।१६३॥ ९ वपरमापूर्वजन्यत्वामिति किं षष्ठे कलिकापूर्वेणेति वाच्यम् षष्ठेनाप्युत्तराङ्गदक्षिणासहकारेणैव परमापूर्वजननात्तावत्कालं षष्ठस्य यागस्यानवस्थित्या तज्जन्यापूर्वस्यावश्यकत्वात् अत्र परमापूर्वम्प्रति स्वर्गम्प्रति च दर्शत्वपूर्णमासत्वव्यापकेन दर्शपूर्णमासोभयसाधारणवैजात्येन कारणत्वमित्येके दर्शत्वेन पूर्णमासत्वेन च कारणत्वन्दण्डचक्रवन्मिलितानाम्फलोपधानमित्यपरे अत्र त्रयात्मकदर्शजन्यमपूर्वमेकं कलिकापूर्वं त्रयव्यापारकम् एवं त्रयात्मकपूर्णमासजन्यमेकमपूर्वं कलिकापूर्वं त्रयव्यापारकन्ताभ्यां स्वर्गजनकापूर्वोत्पत्तिस्तच्च परमापूर्वम्फलशिरस्कापूर्वमित्युच्यते इति नवापूर्वपक्षस्त्वेके तत्रैव फलशिरस्कापूर्वमानाभावाददृष्टापूर्वोत्पत्त्यैव कलिकापूर्वे षट्कैनैव परमापूर्वसम्भवाद्व्यापारीभूतापूर्वद्वये मानाभावात्सूक्ष्मकासप्तापूर्वपक्ष एव युक्त इति नव्याः। इत्थञ्चापूर्वज्ञाने शिपितृयज्ञादौ कर्तृनिष्ठमु॥ ॥ श्रीः ॥ श्रीः ॥ श्रीः ॥

त्पद्यत इत्येके भोक्तृनिष्ठमिति तु सम्प्रदायः। प्राभाकरास्तु यागक्रिया सर्वात्मना नैव नश्यति किन्तु सूक्ष्मरूपेण स्वर्गदेहारम्भकेषु यागसम्बन्धि
द्व्यारम्भकेषु यागकर्त्रीयात्मनि वा वस्थाय फलमारभत इत्याहुः। तन्न ज्ञानेच्छादिरूपस्य यागस्यात्मनो योग्यविशेषगुणतया क्षणचतुष्टयानव
स्थायित्वनियमात् ज्ञानेच्छादीनां सदा ननुभवेन समानाधिकरणस्योत्तरवर्त्तिगुणनाश्यत्व स्वीकारात् अन्यथैवं रीत्या जगत एव सूक्ष्मरूपेण
या सर्वदावस्थानप्रसङ्गादित्यलं विस्तरेण १६०।१६१।१६२॥ ७॥ ननु गङ्गादिदर्शनादिनाऽऽई श्वरे कुतो न धर्मादेरुत्पत्तिरत आह मूले इमौ तु।

इमौ धर्माधर्मौ। अतो ज्ञानिना कृते अपि सुकृतदुष्कृतकर्मणी न फलाय अलमिति भावः ज्ञानादपीति अपिना भोग।
परिग्रहः ननु तत्त्वज्ञानस्य कथन्धर्माधर्मनाशकत्वं नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीति वचनविरोधात् इत्य
त्त तत्त्वज्ञानिनां स्थितिकायव्यूहेन सकलकर्मणा म्भोगेन क्षय इति चेन्न तत्र भोगस्य वेदबोधितनाशकोपलक्षक

इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः। शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः॥ १६४॥ ८
कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः। सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते॥ १६५॥

त्वात् कथमन्यथा प्रायश्चित्तादिना कर्मणां नाशः तदुक्तं ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन क्षीयन्ते चास्य
कर्माणि तस्मिन्दृष्टे परावरे इति ननु तत्त्वज्ञानिनस्तर्हि शरीरावस्थानं सुखदुःखादि कं च न स्यात् ज्ञानेन सर्वेषां कर्म
णां नाशादिति चेन्न प्रारब्धेतरकर्मणामेव नाशात् तत्र च्छरीरभोगजनकं हि यत्कर्म तत्प्रारब्धन्तदभिप्रायमेव नाभु
क्तमिति वचनमिति शब्दं निरूपयति शब्द इति॥ ८॥ वासनाजन्याविति ईश्वरे मिथ्याज्ञानजन्यवासनाविरहान्न धर्मादेरु
त्पत्तिरिति भावः ननु धर्माधर्मौ प्रति वासनाया हेतुत्वे मानाभाव इत्यत आह मुक्तावल्यामत इति ज्ञानिनां तत्त्वज्ञानवता वचनविरोधादि
ति तेनादृष्टनाशमात्रे भोगस्य हेतुत्वप्रतिपादनादिति भावः इत्यन्त्वेति कर्मणां भोगैकनाश्यत्वे चेत्यर्थः। अन्यथा उपलक्षकत्वाभावे
सर्वकर्माणीति सर्वकर्मजन्यादृष्टानीत्यर्थः भस्मसात्कुरुते नाशयति स्मृतिं दर्शयित्वा श्रुतिं दर्शयति क्षीयन्ते चेति तदभिप्रायमेव

गौरवादिति दशशब्दानान्तत्प्रागभावानान्तद्धेतुहेतुमद्भावानाञ्च कल्पने गौरवादित्यर्थः १६४।१६५।१६६ उक्तप्रतीतिविरोधादिति उत्पादविना
शशालिप्रत्ययविरोधादित्यर्थः इत्थञ्चेति प्रत्यभिज्ञानस्य सजातीयविषयत्वे चेत्यर्थः। द्वयोरपीति उत्पादप्रतीतिप्रत्यभिज्ञानयोरित्यर्थः॥ छ॥

नभोवृत्तिः आकाशसमवेतः। दूरस्थशब्दस्याग्रहणादाह श्रोत्रेति ननु मृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिस्तत आह
वीचीति १६४।१६५ आद्यशब्देन वहिर्देशादिगवच्छिन्नोऽन्यशब्दस्तेनैव शब्देन जन्यते तेन चापरस्तद्व्यापकः एवं क्रमेण श्रो
त्रोत्पन्नो गृह्यत इति कदम्बेति आद्यशब्दाद्दशदिक्षु दशशब्दा उत्पद्यन्ते तेभ्यश्चान्ये दशशब्दा उत्पद्यन्त इति भावः अस्मिन्मते क
ल्पनागौरवादुक्तम् कस्यचिन्मत इति १६६ ननु शब्दस्य नित्यत्वादुत्पत्तिकथनमसङ्गतमत आह उत्पन्नेति शब्दानामुत्पाद
विनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः ननु स एवायं ककार इत्यादिप्रत्यभिज्ञानाच्छब्दानां नित्यत्वम् इत्यञ्चोत्पादविना

वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता। कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते १६६ उत्पन्नः को विन
ष्टः क इति बुद्धेरनित्यता सोयं क इति बुद्धिस्तु साजात्यमवलम्बते १६७ तदेवौषधमित्यादौ सजातीयेपि दर्शना
त् तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः १६८॥ इति श्रीविश्वनाथपञ्चाननकृता कारिकावली समाप्ता॥

शाबुद्धिर्भ्रमरूपैवेत्यत आह सोयमिति साजात्यमिति तत्र प्रत्यभिज्ञानस्य तत्सजातीयत्वं विषयो न तु तद्व्यक्त्यभेदो विषयः उ
क्तप्रतीतिविरोधात् इत्थञ्च द्वयोरपि प्रतीत्योरभ्रमत्वमिति १६७ ननु सजातीये सोयमिति प्रत्यभिज्ञा कुत्र दृष्टेत्यत आह तदे
वेति यदौषधमन्येन कृतं तदौषधमन्यमयापि कृतमित्यादिदर्शनादिति भावः १६८॥ इति श्रीमहोपाध्यायविद्यानिवासभट्टा
चार्यपुत्रश्रीयुतविश्वनाथपञ्चाननभट्टाचार्यविरचिता सिद्धान्तमुक्तावली समाप्ता॥ छ॥ ९९ अत्र मीमांसकाः स एवायं क
कार इति प्रत्यभिज्ञया गकारादेस्तावत्कालावस्थानस्य विषयीकृतत्वेनान्तराभूतशब्दादिनाशेन नाशकाभावाद्वर्णनित्यत्वसिद्धिः नच प्र

५७

का॰मु॰
दि॰
२३६

त्यभिज्ञा तज्जातीयत्वविषयिणी बाधकाभावात् अन्यथा सर्वत्रापि तथाभावे भेदोच्छेदापत्तिः न च तारत्वमन्दत्वरूपविरुद्धधर्माध्यासो बा-
धकः प्रत्यभिज्ञानबलेन तस्य नित्यत्वसिद्धौ तारत्वादेर्व्यञ्जकवायुधर्मत्वस्य कल्पनात् श्रोत्रेण वायुधर्मस्य तारत्वादेरपि ग्रहणासम्भवात् य
एव तारः स एवान्यापेक्षया मन्द इति प्रतीतेस्तारत्वमन्दत्वयोरविरोधाच्चेत्याहुः तन्न तथा सति कत्वादेरपि व्यञ्जकवायुधर्मत्वापत्त्या ककार-
गकारयोरपि भेदो न सिद्ध्येदिति वर्णैक्यापत्तेः । वस्तुतस्तु वर्णानित्यत्वपक्षे कण्ठताल्वाद्यभिघातानां कत्वादिकं कार्यतावच्छेदकं वर्णनित्यता-
पक्षे तु कत्वाद्याश्रयाकाशत्वमिति गौरवात् न च नित्यत्वमतेऽपि लौकिकविषयितया कत्वमेव तज्जन्यतावच्छेदकमिति गौरवावकाश इति वा-
च्यम् कोलाहलप्रत्यक्षस्यासंग्रहप्रसङ्गात् नहि कोलाहलप्रत्यक्षं कत्वादिविषयकम् अन्यथा तुल्ययुक्त्या घटाद्युत्पादकस्यापि घटप्र-
त्यक्षत्वमेव कार्यतावच्छेदकमिति तदपि नित्यमेव स्यादिति न चानित्यत्वमते प्रत्यभिज्ञायास्तज्जातीयत्वविषयत्वेन तज्जातीयोऽयमिति
स्यान्न तु सोऽयमिति तिवाच्यम् यत्र प्रत्यभिज्ञाया जातित्वेन गत्वादेर्भानं तत्रैव तज्जातीयोऽयमित्याकारः यत्र तु स्वरूपतो भानं तत्र सोऽय-
मित्याकार इत्यभ्युपगमादिति अत्रेदं बोध्यम् शब्दो द्विविधः ध्वन्यात्मको वर्णात्मकश्च । तत्र ध्वन्यात्मकसंयोगजन्याद्यशब्दं प्रति
गगनं समवायिकारणम् भेर्याकाशसंयोगोऽसमवायिकारणम् भेरीदण्डसंयोगादिर्निमित्तकारणम् विभागजन्यध्वन्यात्मकाद्यश-
ब्दं प्रति तु वंशदलाकाशविभागोऽसमवायिकारणम् वंशदलद्वयविभागो निमित्तकारणम् वर्णात्मकाद्यशब्दं प्रति तु कण्ठता-
ल्वादिनाकाशसंयोगोऽसमवायिकारणम् कण्ठताल्वादिना वाय्वादिसंयोगो निमित्तकारणम् द्वितीयादिशब्दं प्रति तु आद्यशब्दो-
ऽसमवायिकारणम् न च भेर्याकाशसंयोगकण्ठाद्याकाशसंयोगादीनां शब्दं प्रति कारणत्वे मानाभाव इति वाच्यम् भावकार्यस्या-
समवायिकारणजन्यत्वनियमेन तत्कारणत्वस्वीकारात् तादृशनियमे मानाभावे तु मास्तु तेषाङ्कारणत्वं भेरीदण्डसंयोगादिनि-
मित्तकारणसहकृतेनाकाशेनैव शब्दोत्पत्तिसम्भवादिति प्रथमादिशब्दानां स्वस्वकार्यशब्दे नैव नाशः चरमस्य तूपान्त्यशब्दे-
नोपान्त्यशब्दनाशेन वा नाश इति १६७ मूले तदेवौषधमित्यादिना सैवेयं दीपकलिकेत्यादेः परिग्रहः ननु तत्रापि व्यक्तिभेद एव विषयोऽस्त्वतो
भावार्थं प्रकाशयति यदौषधं मया कृतमित्यादिना अत्र च स्वकर्तृकत्वस्वभिन्नकर्तृकत्वरूपविरुद्धधर्माध्यासादिति भेदप्रत्ययस्य ।

राम॰
२३६

प्रतिबन्धकस्यसत्त्वात्तद्व्यक्त्याभेदोविषयःकिन्तुतत्सजातीयाभेदोविषयइतिभावः॥ १९८ ॥ भानुम्प्रणम्यपरिभाव्यचशास्त्रसार-
म्मुक्तावलीकिरणएषपितृप्रदिष्टः॥ सद्युक्तिभिर्दिनकरेणकरेणसोयन्नीतःप्रकाशपदवींसुधियांमुदेस्तु १ मुक्तावलीप्रकाशोयःस्वान्ता-
न्ततिमिरापहः तेनसन्तोषमायातुनीलकण्ठःसतीप्रियः॥ २॥ ✿ ॥ इतिश्रीमद्दिनकरभट्टविरचितान्यायसिद्धान्तमुक्तावलीदी-
पिकासमाप्ता॥ ✿ ॥ अथनिरूपणक्रमः ॥ ✿ ॥ अत्रप्रमेयसन्दर्भःक्रमेणैवविलिख्यते प्रागुद्देशः पदार्थानांसाधर्म्यविनि-
रूपणम् १ प्रसङ्गात्तत्रनिर्दिष्टङ्कारणत्वंसविस्तरम् अन्यथासिद्धयःपञ्चउक्ताक्षित्यादिकागुणाः २ पुनःक्षित्यादिषुप्रोक्ता
गुणभेदाअशेषतः क्षित्यादिभेदसहितास्तत्रात्मविनिरूपणे ३ बुद्धेःप्रपञ्चोनिर्दिष्टस्सन्निकर्षोपिषड्विधः लौकिकोलौकिकस्तत्र
त्रिविधानुमितिःस्मृताः ४ सविस्तारंविनिर्दिष्टाहेत्वाभासाश्चतत्रहि उपमानंशाब्दबोधप्रकारोऽथतदुत्तरः ५ मनोनिरूपितम्प
श्चाद्गुणानाम्मूर्त्तत्वचिन्तिता अमूर्त्तेमूर्त्तितेत्यादिपाकान्तविनिरूपणम् ६ गुणप्रकारविस्तारःशब्दान्तइतिसङ्ग्रहः॥ ॥

श्रीसम्वत् १९४२ मितीशुद्धज्येष्ठशुक्लद्वितीयायांरविवासरे॥ श्रीशुभम्भूयात्॥

श्रीकाशीपुर्य्यांस्वस्तिश्रीपृथिवीयाख्यनगराधिराजमहाराजइन्द्रकिशोरवहादुरसूनुश्रीमन्महाराजह
रीन्द्रकिशोरवहादुराणांनिकेतनेश्रीमदुदासीनसाधुपण्डितस्वरूपदाससंशोधितंकारकाव
लीमुक्तावलीदिनकरीरामरुद्रीटिप्पणीसहितपुस्तकंगोवर्धनदासाभिधेयेनमयाहरि
हररत्नाकराख्यस्वीययन्त्रालयेमुद्रितं येषांमहाशयानांसमपेक्षाभवेत् तेषांकुंजगल्ली
तिप्रथितपण्यवीथिकायाःपश्चिमद्वारनिकटवर्त्तिनिमदीयपण्यालयेसंमिलिष्यति·